# अथ वैकृतं काण्डम्

व्याख्याताः प्रवराः ॥ १ ॥

वैकृतानि व्याख्यास्यामः ॥ २ ॥

अथ द्वितय्यो ब्राह्मणानां समुत्पत्तयो भवन्ति ॥ ३ ॥

तेषां समुत्पत्तिं प्रतिपत्तिं च व्याख्यास्यामः ॥ ४ ॥

येषां पुरुषतः प्रजोत्पत्तिरविच्छिन्ना भवति ते संहतकुलीनाः ॥ ५ ॥

ये सप्तभूयःपञ्चपुरुषं वा योनिश्रुतशीलवृत्तसंपन्नाः पुत्रवन्तस्ते पितृमन्तः पैतृमत्या ऋषय आर्षेया भवन्त्यार्त्वीजानाः ॥ ६ ॥

अथ ये दत्तकक्रयक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेण नानार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति ॥ ७ ॥

द्व्यामुष्यायणाः काककोकिलास्तस्माद्द्विपितरः स्मृताः। तस्माद्द्विजा भारद्वाजा ब्राह्मणाः क्षत्रिया विशः ॥ ८ ॥

यथैतच्छौङ्गशैशिरीणां भरद्वाजौदमेधीनां लौगाक्षीणां च ॥ ९ ॥

यानि चान्यान्येवंसमुत्पत्तीनि कुलानि भवन्ति तेषां तथैव प्रवराः स्युः ॥ १० ॥

द्विप्रवरसंनिपाते पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः। अपि वा त्रयोऽन्ये त्रयोऽन्ये। तन्न तथा कुर्यात्। तस्मात्त्रीनेकं पञ्च वा वृणीते द्वयोरेव त्रीन् पञ्च वा नातिवृणीते। अथ यदि सार्धं प्रब्रूयादथ यदि पितृव्येण ज्ञातिना वैकार्षेयेण जातास्तेषां परिग्रहीतुरेव भवन्ति ॥ ११ ॥

अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युः ॥ १२ ॥

यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिञ्छ्राद्धे पृथगुद्दिश्य वैकपिण्डे द्वावनुकीर्तयेत्परिग्रहीतारं चोत्पादयितारं चाऽऽतृतीयात्पुरुषात् ॥ १३ ॥

आर्षेयाज्ञानादेते(के)षामेव प्रवराणामाद्यं प्रवरणं प्रवृणीते प्रतिप्रश्नेन वा यं यस्योपपन्नं मन्येत तस्य कुर्यात् ॥ १४ ॥

तथा पुरोहितप्रवरो वा स्यादेकार्षेयप्रवरो राजन्यः ॥ १५ ॥

एतेनैव वैश्यस्य प्रवरो व्याख्यातः ॥ १६ ॥

यदि सार्षं ब्रूयान्मानवैलपौरूरवसेति होता ब्रूयात्। पुरूरवोवदिलवन्मनुवदित्यध्वर्युः ॥ १७ ॥

यदि पित्र्यमश्नीयुर्न विवहेयुः ॥ १८ ॥

पुरोहितप्रवरावेव राजन्यवैश्यौ स्यातामिति ह विज्ञायते ॥ १९ ॥

दिवि वर्षसहस्रं मोदते वंश्याध्यायी यस्य चाश्नाति गृहे वंश्याध्यायी स दिव्यं वर्षसहस्रमेकैकस्य ऋषेरतिथिर्भवति ॥ २० ॥

नान्यस्मिन्प्रवरणं दद्यान्नापुत्राय नाशिष्याय नासंवत्सरोषिताय ॥ २१ ॥

सर्वेषां पङ्क्तिपावनानामुपरिष्टाद्भवति यः प्रवराध्यायमधीते यः प्रवराध्यायमधीते ॥ २२ ॥

इति वैकृतं काण्डम् ॥

## अथ श्लोककाण्डम्

जमदग्निर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥ १ ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ।
म्रीयमाणतया वाऽपि सत्तया वाऽनुवर्तनम् ॥ २ ॥
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ।
समानमुनिभूयस्त्वमेकप्रवरतामपि ॥ ३ ॥
समानप्रवरत्वं च द्वेधा बौधायनोऽब्रवीत् ।
मुनिप्रणीतप्रवरैरूनपञ्चाशता वयम् ॥ ४ ॥
अनन्तान्यपि गोत्राणि वर्गीकृत्याभिदध्महे ।
जामदग्न्यौ वत्सविदावार्ष्टिषेणाः परस्परम् ॥ ५ ॥
नान्वियुः प्रवरैक्येन सगोत्रत्वेन चाऽऽदिमौ ।
यास्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः ॥ ६ ॥
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ।
उक्ताः सप्त भृगोर्वंश्या वक्ष्यन्तेऽङ्गिरसो गणाः ॥ ७ ॥
गौतमाः सप्त चाऽऽयास्याः शारद्वन्तास्तथाऽपरे ।
कौमण्डा दैर्घतमसस्ततः कारेणुपालयः ॥ ८ ॥
वामदेवा औशनसा गोत्रर्ष्यैक्याच्च नान्वियुः ।
भरद्वाजाः सकपयो गर्गा रौक्षायणा इति ॥ ९ ॥
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ।
केवलाङ्गिरसश्चेति विष्णुवृद्धाः सकण्वजाः ॥ १० ॥
हारीता राथीतराश्च मुद्गलाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥ ११ ॥
षोडशाङ्गिरसस्त्रेधा प्रोक्ताः संकृतयस्तथा ।
संकृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ॥ १२ ॥
स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वयः ।
चत्वारोऽत्रय आद्यात्रिर्वाद्भूतको गविष्ठिरः ॥ १३ ॥
मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नान्वियुः ।
त्रयश्च कश्यपगणा नैध्रुवा रैभ्यशाण्डिलाः ॥ १४ ॥
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ।
वसिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः ॥ १५ ॥
अहर्वसिष्ठतोक्तिश्च प्रयाजाद्यादिगोचरा ।
वासिष्ठाः कुण्डिनाश्चैव उपमन्युः पराशराः ॥ १६ ॥

वासिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथः ।
कुशिका रोहितगणा रौक्षकाः कामकायनाः ॥ १७ ॥
कता धनञ्जया आजा अघमर्षणपूरणाः ।
इन्द्रकौशिकजाश्चेति विश्वामित्रगणा दश ॥ १८ ॥
नोद्वहेयुः सगोत्रत्वात्कचिच्च प्रवरैक्यतः ।
अगस्तयः साम्भवाहाः सोमवाहा इति त्रयः ॥ १९ ॥
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ।
वर्गा एकोनपञ्चाशत्प्रसिद्धा मुनयः स्मृताः ॥ २० ॥
अप्रसिद्धाः परे वंशा अन्तर्भूता इहैव ते ।
विश्वामित्रात्रिगोत्रैश्च नोद्वहेयुर्धनञ्जयाः ॥ २१ ॥
अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ।
तथैव जातुकर्ण्याश्च वसिष्ठैरत्रिभिः सह ॥ २२ ॥
भरद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरेः ।
क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरिः ॥ २३ ॥
विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ।
कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः ॥ २४ ॥
गुरोः सगोत्रप्रवरा नोद्वाह्याः क्षत्रविड्जनैः ।
स्वगोत्राद्यनभिज्ञैश्च विप्रैराचार्यगोत्रजाः ॥ २५ ॥
दानादिनाऽन्यगोत्रजाः स्युरज्ञानाद्गुरुगोत्रिणः ।
समानप्रवरोद्वाहो निषिद्धः क्षत्रियवैश्ययोः ॥ २६ ॥
प्रवरान्मानवेत्यस्मात्प्रवराचार्यगोत्रजाः ।
इत्थं सगोत्रसंबन्धां विवाहविषये स्थिते ॥ २७ ॥
यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति ।
गुरुतल्पव्रताच्छुद्धिर्गर्भस्तज्जोऽन्यतां व्रजेत् ॥ २८ ॥
भोगतस्तां परित्यज्य पालयेज्जननीमिव ।
अज्ञानादैन्दवैः शुध्येत्त्रिभिर्गर्भस्तु कश्यपः ॥ २९ ॥
महद्भिर्महतो यत्नात्कृतः प्रवरनिर्णयः ।
समानप्रवरां कन्यां मातृतः संख्यया तु या ॥ ३० ॥
नोद्वहेयुश्च तां कन्यां मातृतः पितृतस्तथा ।
ज्ञातव्याः प्रवरा ब्रह्मसायुज्यं श्रुतितोऽन्यथा ॥ ३१ ॥
गुरुतल्पमहादोषाच्चाण्डालजातिशङ्कया ।
समानप्रवरैर्ज्ञाता विकल्पप्रवरैस्तथा ॥ ३२ ॥
एवमुत्पत्तिचाण्डाला ब्रह्मणा निर्मिताः पुरा ।
शाण्डिल्यकश्यपौ चैव समानप्रवरावुभौ ॥ ३३ ॥

उद्वाहस्तु न कर्तव्यस्तथा वत्सभृगू इमौ ।
वत्सकौशिकशाण्डिल्यगर्गगृत्समदास्तथा ॥ ३४ ॥
विकल्पः पञ्चभिर्गोत्रैरुद्वाहं न तु कारयेत् ।
उद्वहेत्तु द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ ३५ ॥
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ३६ ॥
उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ।
तदभावे तु पञ्चम्याः पितृपक्षेऽप्ययं विधिः ॥ ३७ ॥
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ।
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥ ३८ ॥
चतुर्थी पञ्चमी श्रेष्ठा विवाहं तत्र कारयेत् ।
अनिन्द्यां च कथं निन्द्याद्यावन्नास्ति सपिण्डता ॥ ३९ ॥
अज्ञानाच्च द्विजा मूढाः प्रशस्ता इतरैर्द्विजैः ।
चतुर्थी पञ्चमी श्रेष्ठा विवाहविषये द्विज ॥ ४० ॥
भरद्वाजात्पुराऽन्योन्यं न विवाह्याऽङ्गिरोगणे ।
आश्वलायनपाठे तु गौतमेन कृता अपि ॥ ४१ ॥
विवाहं गौतमैः कुर्यात्पृषदश्वाः स्ववंशजाः ।
बहुपाठानुसारेण भारद्वाजा हि ते स्मृताः ॥ ४२ ॥
ऋक्षास्तु पृषदश्वास्तु भरता गोत्रिणः स्मृताः ।
उशिजा वामदेवास्तु तथा दीर्घतमादयः ॥ ४३ ॥
गौतमा एव विज्ञेया बहुवेदादिपाठतः ।
पृषतैश्च भरद्वाजैर्नोद्वहन्ति मिथस्तु ते ॥ ४४ ॥
कपयोऽपि भरद्वाजा यदि वासिष्ठवाक्यतः ।
भरद्वाजप्रवरणाः केचिदाहुः पृथक् पृथक् ॥ ४५ ॥
~~भरद्वाजत्रिगर्गैश्वापस्तम्बादिपाठतः ।~~
विश्वामित्रैर्भरद्वाजैर्नोद्वहेच्छौङ्गशैशिरिः ॥ ४६ ॥
अन्येऽपि ये द्विगोत्रोक्तास्तेऽपि ताभ्यां न कुर्वते ।
नान्योन्यं हरिकुत्सैश्च सर्वैरन्यैर्यथारुचि ॥ ४७ ॥
मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ४८ ॥
एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रं स्याद्वर्जयेद्भृगुरङ्गिराः ॥ ४९ ॥
पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥ ५० ॥

येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथस्तु ते ।
भृगूणां चैतदाद्यात्प्राग्विवाहो न परस्परम् ॥ ५१ ॥
प्रवरान् पितृगोत्रे तु मातृगोत्रे न चिन्तयेत् ।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥ ५२ ॥
यद्येकं प्रवरं भिन्नं वरस्य पैतृके तथा ।
विवाहोऽपि न कर्तव्यः सा कन्या भगिनी भवेत् ॥ ५३ ॥
काश्यपरैभ्याः प्रोक्ताश्च शाण्डिल्यास्तु तथाऽपरे ।
विवाहस्तु न कर्तव्यः सा कन्या भगिनी भवेत् ॥ ५४ ॥
परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्याः परित्यागमतिकृच्छ्रविशोधनम् ॥ ५५ ॥
कात्यायनेन रचितो विप्राणां हितकाम्यया ।
अध्यायः प्रवराख्योऽयं पुरा ब्रह्मविनिर्मितः ॥ ५६ ॥

इति श्लोककाण्डं परिसमाप्तम् ॥

समाप्तोऽयं कात्यायनीयः प्रवराध्यायः ॥

प्रथमो भागः समाप्तः ॥